दं. देवानान्दक्षिणायै दातुरिहभूयासमयम्मे कामः समृद्ध्यतामुपमा अ.
॥२॥ दोनमतु ॥ ४॥ सत्रस्यऽऋद्धिरस्यगन्न्मज्ज्योतिरमृताऽअभूम ॥ दि १
वम्पृथिव्याऽअध्यारुहामाविदामदेवान्स्वर्ज्ज्योतिः ॥ ५ ॥ स्व
स्तिनऽइन्द्रोव्वृद्धश्रवाःस्वस्तिनःपूषाव्विश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्यो
ऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्द्दधातु ॥ ६ ॥ भूरसिभूमिरस्यदिति
रसिव्विश्वधायाव्विश्वस्यभुवनस्यधर्त्री ॥ पृथिवीय्यच्छपृथिवीन्दृ
ꣳहपृथिवीम्माहिꣳसीः ॥ ७ ॥ आजिघ्रकलशम्मह्यात्वाव्विशन्त्वि
न्दवः ॥ पुनरूर्ज्जानिवर्त्तस्वसानःसहस्रन्धुक्ष्वोरुधारापयस्वती

पुनर्म्मा विशताद्रयिः ॥ ८ ॥ मुहीद्यौः पृथिवीचंनऽइमँयुज्ञम्मि
मिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ ९ ॥ व्वरुणस्योत्तम्भनमसिव्व
रुणस्यस्कम्भसर्ज्जनीस्त्थो व्वरुणस्यऽऋतसदन्यसि व्वरुणस्यऽऋ
तसदनमसिव्वरुणस्यऽऋतसदनमासीद ॥ १० ॥ धान्यमसिधिनु
हिदेवान्प्राणायत्वोदानायत्वाव्यानायत्वा ॥ दीर्घामनुप्प्रसितिमा
युषेधान्देवोवः सविताहिरण्यपाणिः प्प्रतिगृब्भ्णात्वच्छिद्रेणपाणि
नाचक्षुषेत्वामहीनाम्पयोसि ॥ ११ ॥ याऽओषधीः पूर्व्वाजातादेवे
भ्यस्त्रियुगम्पुरा ॥ मनैनुबब्भ्रूणामहंशतन्धामानिसप्तच ॥ १२ ॥

परिवाजंपतिः॑कविरग्निर्हव्यान्यंक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥१३॥
याःफलिनीर्याऽअंफला अंपुष्पायाश्चंपुष्पिणीः ॥ बृहस्पतिप्रसू
तास्तानोमुञ्चन्त्वर्ठहंसः ॥ १४ ॥ हिरण्यगर्भःसमंवर्त्तताग्रेभूतस्यं
जातःपतिरेकंऽआसीत् ॥ सदांधारपृथिवींद्यामुतेमाङ्कस्मैदेवायं
हविषांविधेम ॥ १५ ॥ अश्वत्थेवोनिषदंनम्पर्णेवोंव्वसतिष्कृता ॥
गोभाजऽइत्किलांसथयत्सनवंथपूरुषम ॥ १६ ॥ सुजांतोज्ज्यो
तिषासहशर्म्मव्वरूथमासंदत्स्वः ॥ व्वासोंऽअग्नेव्विश्वरूपठंसँव्ययस्व
व्विभावसो॥१७॥पूर्णादर्व्विपरांपतसुपूर्णापुनरापंत ॥ व्वस्नेवाँ

क्रीणावहा॒ऽइषमूर्ज॑ꣳशतक्रतो॥ १८॥ तदस्तु मित्रावरुणा तदग्ने शंय्योर॒
स्मभ्य॑मिदमस्तु शस्तम्॥ अशीमहि॑ गा॒धमु॒त प्रति॒ष्ठां नमो॑ दिवे बृ॑हते
सादनाय॥ १९॥ मनो॒ जू॒तिर्जु॑षता॒माज्य॑स्य बृह॒स्पति॒र्यज्ञ॑मि॒म
न्तनो॒त्वरि॑ष्टं य॒ज्ञꣳ समि॒मन्द॑धातु॥ विश्वे॑ दे॒वास॑ऽइ॒ह मा॑दयन्ता॒मो३॒
प्रति॑ष्ठ॥ २०॥ म॒नो जू॒तिर्जु॑षता॒माज्य॑स्येति मनसा वा॒ऽइदꣳ स॒
र्व॑मा॒प्तन्तन्म॒नसै॒वैतत्स॒र्व॑माप्नोति बृह॒स्पति॒र्यज्ञ॑मि॒मन्त॒नो॒त्व॒रि॑ष्टं य॒
ज्ञꣳ स॒मि॒मन्दधात्विति य॒द्विवृ॑ढन्तत्स॒न्दधाति वि॒श्वे॒दे॒वा॒स॒ऽइ॒ह मा॑दय
न्ता॒मिति स॒र्वं॒ वै॒ वि॒श्वे॒दे॒वाः स॒र्वे॑णै॒वैतत्स॒न्दधाति स॒ यदि का॒मयेत तद्

द्रं ब्रूयात्प्रतिष्ठेति ॥ २१ ॥ एषवैप्रतिष्ठानामयज्ञोयत्रैतेनयज्ञेनयजन्तेसु अ.
॥४॥ र्वमेवप्रतिष्ठितम्भवति ॥ २२ ॥ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुष २
स्प्परि ॥ एवानोदूर्व्वेप्रतनुसहस्रेणशतेनच ॥ २३ ॥ चन्द्रमाऽअप्स्व
न्तरासुपर्णोधावतेदिवि ॥ रयिम्पिशङ्गम्बहुलम्पुरुस्पृहर्ठ०हरिरेति
कनिक्रदत् ॥ २४ ॥ यदाबध्नन्दाक्षायणाहिरण्यर्ठ०शतानीकायसुम
नस्यमानाः ॥ तन्मऽआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्य्यथा
सम् ॥ २५ ॥ आयुष्यँवर्च्चस्यर्ठ०रायस्पोषमौद्भिदम् ॥ इदर्ठ०हिरण्यँ
म्वर्च्चस्वज्जैत्रायाविशतादुमाम् ॥ २६ ॥ मनसःकाममाकूतिँवाचः

सुत्यमंशीय ॥ पुशूनाꣳरूपमन्नंस्युरसोयशुःश्रीःश्रयतुाम्मयिस्वाहा
॥ २७ ॥ व्रुतेनदीक्षामांप्नोतिदीक्षयांप्नोतिदक्षिणाम् ॥ दाक्षिणाश्र
द्धामांप्नोतिश्रुद्धयांसुत्यमांप्यते ॥ २८ ॥ तम्पत्नीभिरनुंगच्छेमदे
वाःपुत्रैर्भ्रातृभिरुतवाुाहिरंण्यैः ॥ नाकंगृभ्णुानाःस्सुंकृतस्यंलोकेतृ
तीयेंपृष्ठेऽअधिरोचुनेदिवः ॥ २९ ॥ इति प्रथमोऽध्यायः ॥ १ ॥
आकृष्णेनुरजंसुावर्तमानोनिवेशयंन्नमृतुम्मर्त्यंञ्च ॥ हिरण्ययेंनस
विताारथेनादेवोयांतिभुवंनानिपश्यंन् ॥ १ ॥ इमन्देवाऽअसपत्नꣳ
सुंवद्धम्महतेक्षत्राय महतेज्ज्यैष्ठ्याय महतेजानंराज्ज्याायेन्द्रंस्ये

न्द्रियाय ॥ इममुमुष्यंपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासो
मोस्माकंम्ब्राह्मणानाᳬंराजा ॥ २ ॥ अग्निर्मूर्द्धादिवःकुकुत्पतिःपृ
थिव्याऽअयम् ॥ अपाᳬंरेताᳬंसिजिन्वति ॥ ३ ॥ उद्बुद्ध्यस्वाग्नेप्प्रति
जागृहित्वमिष्टापूर्तेसᳬंसृजेथामयञ्च ॥ अस्मिन्त्सधस्थेऽअध्यु
त्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ ४ ॥ बृहस्पतेऽअतियदर्य्यो
ऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततद
स्मासुद्रविणन्धेहिचित्रम् ॥५ ॥ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्ष
त्रम्पयःसोमम्प्रजापतिः ॥ ऋतेनसत्यमिन्द्रियँविपानᳬंशक्रमन्ध

सुऽइन्द्रंस्येन्द्रियमिदम्पयोमृतुम्मधुं ॥ ६ ॥ शन्नोदेवीरुभिष्टंयुऽआपो
भवन्तुपीतयें ॥ शँय्योरुभिस्रंवन्तुनः ॥ ७ ॥ कयांनश्चित्रऽआभुवदूती
सुदावृंधुःसखां ॥ कयुाशचिष्ठयावृता ॥ ८ ॥ केतुंकृण्वन्नंकेतवेपे
शोंमर्य्याऽअपेुशसे ॥ समुषद्भिरजायथाः ॥ ९ ॥ इति समिद्धोमः ॥
इति द्वितीयोऽध्यायः ॥ २ ॥ ॥ ॥ ॥ ॥ ॥
अग्निन्दूतम्पुरोदंधेहव्युवाहुमुपंब्रुवे ॥ देवा २ँ ऽआसांदयादिह ॥ १ ॥
अप्स्वग्नेसधिुष्टवुसौषंधीरनुरुद्ध्यसे ॥ गर्ब्भेसञ्जांयसेपुनः ॥ २ ॥
स्योनापृथिविनोभवानृक्षुरानिवेशनी ॥ यच्छांनुः शर्म्मं सुप्रथाः

॥ ३ ॥ इदंव्विष्णुर्व्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳬसुरेस्वा
हा ॥४॥ महाँ२ऽइन्द्रोवज्रहस्तःषोडशीशर्म्मयच्छतु ॥ हन्तुपाप्मानं
य्योस्मान्द्वेष्टि ॥ ५ ॥ शुक्रज्ज्योतिश्श्चचित्रज्ज्योतिश्श्चसत्यज्ज्योति
श्श्चज्ज्योतिष्मांश्च ॥ शुक्रश्श्चऽऋतपाश्चात्यंᳬहाः ॥६॥ प्रजापतेन
त्वदेतान्न्यन्न्योव्विश्श्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्त
न्नोऽअस्तुव्वयᳬस्यामपतयोरयीणाम् ॥ ७ ॥ आयङ्गौःपृश्निरक्रमी
दसदन्म्मातरम्पुरः ॥ पितरञ्चप्प्रयन्त्स्वः ॥ ८ ॥ ब्रह्मजज्ञानम्प्रथमम्पुर
स्ताद्विसीमतःसुरुचोव्वेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यव्विष्ठाःसु

तश्चुषोनिमसंतश्चुव्विवं॥९॥इति नवग्रहस्थापनम् ॥ ३ ॥ ॐ त्र्यंम्ब
कँय्यजामहेसुगुन्धिम्पुंष्टिवर्धनम् ॥ उर्व्वारुकमिंवबन्धंनान्मृत्योर्मुक्षी
युमामृतात् ॥ त्र्यंम्बकंय्यजामहेसुगुन्धिम्पंतिवेदनम् ॥ उर्व्वारुकमिं
वबन्धंनादितोर्मुक्षीयुमामुतं॥१॥ श्रीश्चंतेलुक्ष्मीश्चुपत्न्यांवहोरात्रे
पार्श्वेनक्षंत्राणिरूपमुश्विनौव्यात्तंम् ॥ इष्णान्निषाणामुम्मंऽइषाण
सर्व्वलोकम्मंऽइषाण ॥२॥ यदक्रंन्दंःप्प्रथुमञ्जायंमानऽउद्यन्त्संमुद्राद्दु
तवापुरीषात् ॥ श्येनस्यंपुक्षाहंरिणस्यंबाहूऽउंपस्तुत्यम्महिंजातन्ते
ऽअर्व्वन् ॥ ३ ॥ व्विष्णोंरुराटंमासिव्विष्णोःश्नप्त्रेस्थोव्विष्णोःस्यूरंसि

विष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥ ४ ॥ आब्रह्मन्ब्राह्मणोब्रह्म
वर्चसीजायतामाराष्ट्रेराजन्यःशूरइषव्योतिव्याधी महारथो जाय
तांदोग्ध्रीधेनुर्वोढानड्वानाशुःसप्तिःपुरन्धिर्योषाजिष्णूरथेष्ठाः सभे
योयुवास्ययजमानस्यवीरोजायतान्निकामेनिकामेनः पर्जन्योवर्षतु
फलवत्योनऽओषधयःपच्यन्तांयोगक्षेमोनःकल्पताम् ॥ ५ ॥
सजोषाऽइन्द्रसगणोमरुद्भिःसोमम्पिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूँ
रपमृधोनुदस्वाथाभयंकृणुहिविश्वतोनः ॥ ६ ॥ यमायत्वामखाय
त्वासूर्य्यस्यत्वातपसे ॥ देवस्त्वासवितामध्वानक्तुपृथिव्याःसंस्पृ

शंस्पाहि॥अर्चिरंसिशोचिरंसितपोसि ॥ ७ ॥ कार्षिरसिसमुद्रस्यत्वा
क्षित्त्याऽउन्नंयामि ॥ समापोऽअद्भिरंग्मतसमोषंधीभिरोषंधीः ॥ ८॥
चित्रांवसोस्वस्तितेपारमंशीय ॥ ९ ॥ इति नवग्रहदेवतास्थाप
नम् ॥ ४ ॥ सनंःपितेवंसूनवेग्नेसूपायनोभंव ॥ सचंस्वानःस्वस्त
ये ॥ १ ॥ अपोऽअद्यान्वंचारिषठंरसेनसमंसृक्ष्माहि ॥ पयंस्वानग्न
ऽआगंमन्तम्मासठंसृंजवर्चसाप्रजयांचधनेनच ॥ २ ॥ चिदंसितयां
देवतंयाङ्गिरस्वद्ध्रुवासींदपरिचिदंसितयां देवतंयाङ्गिरस्वद्ध्रुवासींद
॥ ३ ॥इदंविष्णुः०॥४॥ इन्द्रंऽआसान्नेताबृहस्पतिर्दक्षिणायज्ञःपुर

दं.
॥८॥

ऽएंतुसोमं॑ः॥ देवुसेनानांमाभिभञ्जतीनाञ्जयंन्तीनाम्मुरुतो युन्त्वग्रम् अ. ६
॥ ५ ॥ इन्द्रुन्दैवीर्विशोमुरुतोनुंवर्त्मानोभवुन्यथेन्द्रुन्दैवीर्विशोमुरुतो
नुंवर्त्मानोभंवन् ॥ एवमिमँऽयजंमानुन्दैवीश्च्विशोमानुषीश्चानुंवर्त्मा
नोभंवन्तु ॥ ६ ॥ प्रजांपतेनत्वदेतान्न्युन्न्यो विश्वांरूपाणिपारिताबंभू
व ॥ यत्कांमास्तेजुहुमस्तन्नोऽअस्त्वुयममुष्यांपितासावुस्यापितावुयꣳ
स्यांमुपतंयोरयीणाꣳस्वाहा॥ रुद्रयत्तेक्रिविपरन्नामुतास्मिन्हुतमंस्य
मेष्टमंसिस्वाहा ॥७॥ नमोस्तुसुर्प्पेब्भ्योयेकेचंपृथिवीमनु॥ येऽअन्त
रिक्षेयेदिवितेब्भ्यंःसुर्पेब्भ्योनमंः ॥ ८ ॥ ब्रह्मजज्ञानम्प्रथमम्पुरस्ता

द्विसीमतःसुरुचोव्वेनऽआंवः ॥ सबुध्न्याऽउपमाऽअंस्यव्विष्ठाःसतश्च
योनिमसंतश्चुव्विवंः ॥ १ ॥ इति नवग्रहाधिदेवतास्थापनम् ॥ ५ ॥
आनोभुद्राःक्कृतंवोयन्तुव्विश्वतोदंब्धासोऽअपरीतासऽउद्भिदंः ॥ देवा
नोयथासदमिद्बृधेऽअसुन्नप्प्रायुवोरक्षितारोदिवेदिवे ॥ १ ॥ देवानांम्भु
द्रासुमतिर्ऋजूयुतान्देवानांरातिरभिनोनिवंर्तताम् ॥ देवानांसु
कख्यमुपंसेदिमाव्वुयन्देवानुऽआयुःप्प्रतिंरन्तुजीवसें ॥२॥ तान्पूर्व्वया
निविदांहूमहेव्वुयम्भगंम्मित्रमदितिन्दक्षंमुस्स्रिधंम् ॥ अर्य्यमणुंव्वरुं
णःसोमंमुश्विनासरंस्स्वतीनःसुभगामयंस्क्करत् ॥ ३ ॥ तन्नो

दं

॥१॥

अ. ७

ख्वातोमयोभुवातुभेषजन्तन्माता पृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणः
सोमसुतोमयोभुवस्तदश्विनाशृणुतन्धिष्णयायुवम् ॥ ४ ॥
तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेव्वयम् ॥
पूषानोयथाव्वेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ ५ ॥ स्वस्ति
नऽइन्द्रोव्वृद्धश्रवाः स्वस्तिनः पूषाव्विश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽ
अरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वामरुतः
पृश्निमातरः शुभंय्यावानोव्विदथेषुजग्मयः ॥ अग्निजिह्वामनवः सूर
चक्षसोव्विश्वेनोदेवाऽअवसागमन्निह ॥ ७ ॥ भद्रङ्कर्णेभिः शृणुयाम

देवाभुद्रम्पंश्श्येमाक्षभिर्य्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसंस्तुनूभिर्व्य
शेमहिदेवहितंय्यदायुः ॥८॥ शुतामिन्नुशरदोऽअन्तिदेवा यत्रांनश्च्चु
क्राजुरसंन्तुनूनांम् ॥ पुत्रासोयत्रंपितरोभवंन्तिमानोमुद्ध्यारीरिषुता
युर्गन्तोः ॥९॥ इति नवग्रहप्रत्याधिदेवतास्थापनम् ॥ ६ ॥ गुणा
नांन्त्वागुणपंतिꣳहवामहेप्प्रियाणांन्त्वाप्प्रियपंतिꣳहवामहे निधी
नान्त्वां निधिपतिꣳ हवामहे व्वसो मम ॥ आहमंजानि गर्ब्भधमा
त्वमंजासि गर्ब्भधम् ॥ १ ॥ जातवेदसे सुनवाम सोमंमरा
तीयुतोनिदंहातिवेदः ॥ सनंःपर्षदतिदुर्गाणिविश्वांनावेवसिन्धुंन्दुरि

तात्युग्निनः॥२॥व्वायोयेतेसहस्त्रिणोरथांसुस्तेभिरागंहि ॥ नियुत्वा
न्त्सोमंपीतये॥३॥ घृतंघृतपावानःपिबतुव्वसांव्वसापावानःपिबता
न्तरिक्षस्यहुविरसिस्वाहा ॥ दिशःप्रदिशऽआदिशोव्विदिशऽउद्दिशो
दिग्भ्यःस्वाहा॥ ४ ॥ यावांकशामधुमत्यश्विनासूनृतावती ॥ तया
युज्ञम्मिमिक्षतम् ॥ ५ ॥ इति पञ्चलोकपालस्थापनम् ॥ ७ ॥ अ
श्विनातेजसाचक्षुःप्राणेनसरस्वतीव्वीर्यम् ॥ व्वाचेन्द्रोबलेनेन्द्राय
दधुरिन्द्रियम्॥१॥युमायत्वा० ॥२॥अयमग्निःसहस्त्रिणोव्वाजस्यश
तिनुस्पतिः॥मूर्द्धाकुवीरयीणाम् ॥३॥ ब्रह्मजज्ञानम्प्रथमम्० ॥ ४॥

सोमोधेनुठ्ठंसोमोऽअर्वन्तमाशुठ्ठंसोमोव्वीरंकर्म्मण्यन्ददाति ॥ सादन्न्यँव्विदथ्यठ्ठंसभेयम्पितृश्श्रवणँ्योददाशदस्मै ॥५॥ नमस्तेरुद्रमन्न्यवऽउतोतऽइषवेनमः ॥ बाहुब्भ्यामुततेनमः ॥ ६ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः ॥ विश्वेदेवाऽअदितिःपंचजनाऽअदितिर्ज्जातमदितिर्जनित्वम् ॥ ७ ॥ व्वाचस्पतयेपवस्वव्वृष्णोऽअठ्ठंशुब्भ्याङ्गभस्तिपूतः ॥ देवोदेवेब्भ्यःपवस्वयेषाम्भागोसि ॥८॥ नमोस्तुसर्प्पेब्भ्यः० ॥ ९ ॥ पितृब्भ्यःस्वधायिब्भ्यःस्वधानमः पितामहेब्भ्यःस्वधायिब्भ्यःस्वधा नमःप्रपितामहेब्भ्यःस्वधा

दं. यिभ्यःस्वधानमः ॥ अक्षन्न्पितरोमीमदन्तपितरोतीतृपन्तपित अ.
॥११॥ रःपितरःशुन्धध्वम् ॥ १० ॥ भगप्प्रणेतर्भगसत्त्यराधोभगेमान्धियमु ८
दवाददन्नः ॥ भगप्प्रनोजनयगोभिरश्वैर्भगप्प्रनृभिर्न्नृवन्तःस्याम
॥११॥ दैव्यावद्ध्वर्यूऽआगतंरथेनसूर्यत्वचा ॥ मद्ध्वायज्ञंसमञ्जा
थे ॥ तम्प्रत्नथायँवेनाश्चित्रन्देवानाम् ॥ १२ ॥ विभ्राड्बृहत्पिबतु
सोम्म्यमद्ध्वायुर्द्दधद्यज्ञपतावविह्रुतम् ॥ वातजूतोयोऽअभिरक्षतित्त्म
नाप्प्रजाःपुपोषपुरुधाव्विराजति ॥ १३ ॥ त्वष्टातुरीपोऽअद्भुतऽइन्द्रा
ग्नीपुष्टिवर्द्धना ॥ द्विपदाच्छन्दऽइन्द्रियमुक्षागौर्न्नवयोदधुः ॥ १४ ॥ पीवो

ऽअन्नारयिवृधं÷सुमेधाःश्वेतःसिंषक्तिनियुतांमभिश्श्रीः ॥ तेव्वायवे
समंनसो व्वितंस्थुर्व्विश्वेन्नरः÷ स्वपत्यानि चक्रुः ॥ १५ ॥
इन्द्राग्नीऽआगतठं सुतंगीर्ब्भिर्न्नभो व्वरेण्यम् ॥ अस्य पांत
न्धियेषिता ॥ नमो मित्रस्य व्वरुंणस्य चक्षंसे मुहो देवाय तदृतठं
संपर्ध्यत ॥ दूरेदृशे देवजांताय केतवें दिवस्पुत्राय सूर्यांय शठं
सत ॥ १६ ॥ सऽइषुंहस्तैःसनिंषुङ्गिभिर्व्वशीसठंस्रष्टासयुधऽइन्द्रो
गुणेनं ॥ सुठंसृष्टजित्सोमपाबांहुशर्द्ध्युग्रधंन्वाप्प्रतिंहिताभिरस्तां
॥ १७ ॥ मातेवं पुत्रम्पृथिवी पुरीष्यंमुग्निठं स्वे योनांवभाःरुषा ॥

द. ॥१२॥

ताम्विश्वैर्द्देवैर्ऋतुभिः संविदानः प्प्रजापतिर्व्विश्वकर्म्मा व्विमु अ. ९
ञ्चतु ॥ १८ ॥ अपाघमपकिल्बिषमपकृत्यामपोरपः ॥ अपा
मार्ग्गत्वमस्मदपदुःष्वप्न्यंठंसुव ॥ १९ ॥ व्विश्वेऽअद्यमरुतो
विश्वऽऊतीविश्वे भवन्त्वग्नयः समिद्धाः ॥ व्विश्वे नो देवाऽ
अवसागमन्तु व्विश्वमस्तु द्द्रविणं व्वाजोऽअस्म्मे ॥ २० ॥ तत्सं
वितुर्व्वरेण्यम्भर्ग्गोदेवस्यधीमाहि ॥ धियोयोनःप्प्रचोदयात् ॥
॥ २१ ॥ इदँविष्णुर्व्विचक्रमे० ॥ २२ ॥ वसोःपवित्रमसिशत
धारँव्वसोःपवित्त्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुव्वसोःप

वित्रैणशुतधारेणसुप्प्त्राकामंधुक्षः ॥ २३ ॥ व्वरुणस्योत्तम्भंनम्० ॥
॥२४॥ उतनोहिर्बुध्न्यःशृणोत्वजऽएकंपात्पृथिवीसंमुद्रः ॥ विश्वेदे
वाऽऋंतावृधोहुवानास्तुतामन्त्राःकविशुस्ताऽअंवन्तु ॥ २५ ॥ शिवो
नामासिस्वधितिस्तेपितानमंस्तेऽअस्तुमामाहिठंसीः ॥ निर्वर्तया
म्यायुंषेन्नाद्यांयप्प्रजननंनायरायस्पोषांयसुप्प्रजास्त्वायं सुवीर्य्यांय
॥ २६ ॥ पूषन्तवंव्व्रुतेव्वयन्नरिष्येमुकदांचन ॥ स्तोतारंस्तऽइहस्मंसि
॥ २७ ॥ इति नक्षत्रस्थापनम् ॥ अष्टमोऽध्यायः ॥ ८ ॥ ॥
योगेयोगेतुवस्तंरम्व्वाजेव्वाजेहावमहे ॥ सखांयुऽइन्द्रमूतये ॥ १ ॥

दं.
॥१३॥

भद्रंकर्णेभिःशृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गै
स्तुष्टुवांसस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ २ ॥ ध्रुवोसिध्रुवो
यँयजमानोस्मिन्नायतनेप्रजयापशुभिर्भूयात् ॥ घृतेनद्यावापृ
थिवीपूर्य्येथामिन्द्रस्यच्छदिरसिविश्वजनस्यच्छाया ॥ ३ ॥ पञ्च
नद्यःसरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभव
त्सरित् ॥ ४ ॥ सप्तऽऋषयःप्रतिहिताःशरीरेसप्तरक्षन्तिसदमप्रमाद
म् ॥ सप्तापःस्वपतोलोकमीयुस्तत्रजागृतोऽअस्वप्नजौसत्रस
दौचदेवौ ॥ ५ ॥ इमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामव

अ.
९

स्युराचंके ॥ ६ ॥ प्रपर्व्वतस्यवृषभस्यंपृष्ठान्नावंश्चरन्तिस्वसि
चंऽइयानाः ॥ ताऽआवंवृत्रन्नधुराग्रुदंक्ताऽअहिम्बुध्न्यमनुरीयंमा
णाः ॥ व्विष्णोर्व्विक्रमंणमसि विष्णोर्व्विक्रांन्तमसि व्विष्णोःक्क्रान्तमं
सि ॥ ७ ॥ जुवो यस्तेवाजिन्निहितो गुहा यः श्येने परीत्तो
ऽअचंरच्चव्वाते ॥ तेनंनोव्वाजिन्बलंवान्बलेनव्वाजजिच्चभवस
मंनेचपारयिष्णुः ॥ व्वाजिंनोव्वाजजितोव्वाजंठंसरिष्ष्यन्तोबृहस्पतें
र्भागमवंजिग्घ्रत ॥ ८ ॥ सुपर्णोसिगरुत्त्मांस्त्रिवृत्तेशिरोगायत्त्रञ्चक्षु
र्बृहद्रथन्तरेपक्षौ ॥ स्तोमंऽआत्त्माच्छन्दांठंस्यङ्गांनियजूंठंषिनामं ॥

सामंतेतनूर्वामदेद्दयंठ्यंज्ञाघुज्ञियुम्पुच्छान्धिषण्यांः शुफाः ॥ सुपुर्णो
सिगुरुत्म्मान्दिवंङ्गच्छुस्वः पत ॥ ९ ॥ असंङ्ख्यातासुहस्राणियेरु
द्राऽअधिभूम्म्याम् ॥ तेषांठंसहस्रयोजुनेवुधन्न्वांनितन्मसि ॥१०॥
सुहस्रंशीर्षापुरुषः सहस्राक्षः सुहस्रंपात् ॥ सभूमिंठंसुर्व्वतंस्पृत्वात्यं
तिष्ठद्दशांगुलम्॥११॥ सू० वास्स्तोष्पतेप्रतिजानीह्यस्म्मान्त्स्वावे
शोऽअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विप
देशञ्चतुष्पदे ॥ १२ ॥ सू० अमीवहावास्तोष्पतेविश्वारूपाण्या
विशन् ॥ सखासुशेवऽएधिनः ॥ १३ ॥ गुणानांन्त्वा० ॥ १४ ॥

नमोऽस्तुसुर्प्पेभ्यो० ॥ १५ ॥ ऋक् ॥ जातवेदसेसुनवामुसोमंमरा
तीयुतोनिदंहातिवेदः ॥ सनंःपर्षुदातिदुर्ग्गाणिविश्वानावेवुसिन्धुं
न्दुरितात्युग्निः ॥ १६ ॥ प्रजापतेनत्वदेतान्न्युन्न्योविश्वा
रूपाणिपरिताबंभूव ॥ यत्कामांस्तेजुहुमस्तन्नोऽअस्तुव्वुयꣳस्यांमु
पतंयोरयीणाम् ॥ १७ ॥ योवंःशिवतंमोरसुस्तस्यंभाजयतेहनंः ॥
उशुतीरिवमातरंः॥ १८॥इति ध्रुवादिस्था० ॥ नवमोऽध्यायः ॥ ९ ॥
ऋक् ॥ अग्निमीळेपुरोहितंयुज्ञस्यदेवमृत्विजंम् ॥होतांररत्नुधातंमम्
॥ १ ॥ यजुः ॥ इषेत्वोर्ज्जेत्वांव्वायवंस्थदेवोवंःसावितापप्राप्पंयतु

श्श्रेष्ठतमायकर्म्मणऽआप्यायर्ध्वमघ्न्याऽइन्द्राय भागम्प्रजावतीरन
मीवाऽअयक्ष्मामावस्तेनऽईशत माघशंठंसोद्ध्रुवाऽअस्मिन्गोपतौ
स्यातबह्वीर्यजमानस्यपशून्पाहि ॥ २ ॥ साम ॥ अग्नआयाहि
व्वीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ ३ ॥ अथर्व ॥
शन्नोदेवीरभिष्टय० ॥४॥ इतिवेदादिस्था० ॥ दशमोऽध्यायः॥१०॥
त्रातारमिन्द्रमवितारमिन्द्रठं हवेहवे सुहवठं शूरमिन्द्रम् ॥
ह्वयामिशक्रम्पुरुहूतमिन्द्रठं स्वस्ति नो मघवा धात्विन्द्रः ॥ १ ॥
त्वन्नोऽअग्नेतवदेवपायुभिर्म्मघोनोरक्षतन्वश्चवन्द्य ॥ त्राता

तोकस्यतनयेगवांमुस्यानिमेषुरक्षंमाणस्तवंव्रते ॥ २ ॥ सू०
सुगन्नुपन्थाम्प्रदिशन्नऽएहिज्योतिष्मद्धेह्यजरन्नऽआयुः ॥ अपैतुमृत्यु
रमृतम्मऽआगाद्वैवस्वतोनोऽअभयंकृणोतु ॥ ३ ॥ असुंन्वन्त
मयंजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्न्यमुस्स्म
दिच्छसातंऽइत्यानमोदेविनिर्ऋतेतुभ्यंमस्तु ॥ ४ ॥ तत्त्वांयामिब्र
ह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोव्वरुणे
हबोद्धयुरुशंसमानऽआयुःप्प्रमोषीः ॥ ५ ॥ आनोनियु
द्धिःशतिनीभिरद्ध्वरंसंहस्त्रिणीभिरुपंयाहियज्ञम् ॥ व्वायोऽअ

स्मिन्त्सवनेमादयस्स्वयूयम्पातस्स्वस्तिभिः सदानः ॥ ६ ॥ व्वयर्ठं
सोमव्व्रतेतवमनस्तनूषुबिब्भ्रतः ॥ प्रजावन्तः सचेमहि ॥ ७ ॥ त
मीशानम्० ॥ ८ ॥ अस्मेरुद्रामेहनापर्व्वतासोव्वृत्रहत्ये भरहूतौ
सजोषाः ॥ यःशर्ठंसतेस्तुवतेधायिपज्र इन्द्रज्ज्येष्ठाऽअस्माँ२॥
अवन्तुदेवाः॥९॥ स्योनापृथिवि० ॥१०॥ इतिदिक्पालस्था० एका
दशो० ॥ ११ ॥ चित्तिंजुहोमिमनसाघृतेनयथादेवाऽइहागमन्वीति
होत्राऽऋतावृधः॥ पत्येव्विश्वस्यभूमनोजुहोमिव्विश्वकर्म्मणेव्विश्वा
हादाभ्यर्ठंहविः ॥ १ ॥ सप्ततेऽअग्नेसमिधःसप्तजिह्वाःसप्त

ऽऋषयं॑सुप्तधामंप्प्रियाणि ॥ सुप्तहोत्त्राः॑सप्तुधात्वा यजन्ति सुप्त
योनीरापृणस्वघृतेनुस्वाहा ॥ २ ॥ शुक्रज्योतिश्च॰ ॥ ३ ॥ ईदृङ्
चान्न्यादृङ्चं सुदृङ्चु प्प्रतिंसदृङ्च ॥ मितश्च सम्मितश्चसभंराः॥४॥
ऋतश्च्श्च सुत्यश्च ध्रुवश्च धुरुणंश्च ॥ धुर्त्ताचं विधुर्त्ता चं विधारयः
॥ ५ ॥ ऋतुजिच्च सत्युजिच्च सेनुजिच्च सुषेणंश्च ॥ अन्तिमित्रश्च दूरे
ऽअंमित्रश्च गुणः ॥ ६ ॥ ईदृक्षासऽ एतादृक्षासऽ ऊ षु णः
सुदृक्षासुः प्प्रतिसदृक्षासुऽएतंन ॥ मितासंश्चसम्मितासो नोऽअद्यस
भंरसोमरुतोयुज्ञेऽअस्म्मिन् ॥ ७ ॥ स्वतवाँश्चप्प्रघासीचंसान्तपुनश्च

दं. गृहमेधीचं ॥ क्रीडीचंशाकीचोज्जेषी ॥८॥ उग्रश्श्चभीमश्श्चध्वान्तश्श्चधु अ.

॥१७॥ निश्श्च ॥ सासह्वाँश्श्चाभियुग्ग्वाचंव्विक्षिपःस्वाहा ॥९॥ पुनंस्त्वादित्या १२

रुद्राव्वसंवःसमिंन्धतांम्पुनंर्ब्रह्माणो व्वसुनीथयज्ञैः ॥ घृतेनत्वन्तन्न्वं

व्वर्द्धयस्वसत्याःसंन्तुयजंमानस्यकामाः ॥१०॥ त्र्यायुषञ्जमदंग्नेः

कश्यपस्य त्र्यायुषम् ॥ यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥

॥ ११ ॥ इति पूर्णाहुतिः॥१२॥इन्द्रन्दैवीर्व्विशो मरुतो० ॥१॥ इमꣳ

स्तनमूर्ज्जंस्वन्तन्धयापाम्प्रपीनमग्ग्नेसरिरस्यमद्ध्ये ॥ उत्संञ्जुष

स्वमधुमन्तमर्व्वन्त्समुद्रियꣳसदंनमाव्विशस्व ॥ २ ॥ घृतम्मिमिक्षेघृ

तमंस्यघोनिर्घृतेश्रितोघृतम्वंस्यधामं ॥ अनुष्वधमावंहमादयंस्स्व
स्वाहांकृतंवृषभव्वक्षिहृव्यम् ॥ ३ ॥ समुद्राद्दूर्म्मिर्म्मधुंमाँ२उदांरदुपा
छंशुनासमंमृतत्वमांनट् ॥ घृतस्यनामगुह्यँय्यदस्तिंजिह्वादेवानांममृ
तंस्यनाभिः ॥ ४ ॥ व्वयन्नाम प्प्रब्ब्रंवामा घृतस्स्यास्म्मिन्यज्ञे
ज्ञेधांरयामानमोभिः ॥ उपंब्ब्रह्माशृंणवच्छ्छस्यमांनञ्चतुं÷शृङ्गोवमीद्गौ
रऽएतत् ॥ ५ ॥ चत्वारिशृंगात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तांसोऽ
अस्य ॥ त्रिधांबद्धोवृंषभोरोरंवीतिमहोदेवोमर्त्याँ२ऽआँविवेश ॥६॥
त्रिधांहितम्पणिभिर्गुह्यमांनङ्गविदेवासोघृतमन्न्वंविन्दन् ॥ इन्द्रऽए

रुं. ॥१८॥ कुठेसूर्य्यऽएकञ्जजानव्वेनादेकꣳस्वधयानिष्टतक्षुः ॥ ७ ॥ एताऽअ अ. १३
र्षन्तिहृद्यात्समुद्राच्छतव्व्रजारिपुणानावचक्षे ॥ घृतस्य धारा
ऽअभिचाकशीमि हिरण्ययो व्वेतसो मध्यऽआसाम् ॥ ८ ॥ सम्म्य
क्स्रवन्ति सरितो नधेना अन्तर्हृदामनसापूयमानाः ॥ एतेऽअर्षन्त्यू
र्म्मयोघृतस्यमृगाऽइवक्षिपणो रीषमाणाः ॥ ९ ॥ सिंधोरिव प्प्राध्वनेशू
घनासो व्वातप्प्रमियः पतयंतियह्वाः ॥ घृतस्य धाराऽअरुषो
न व्वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥ १० ॥ अभिप्प्रवन्त
समनेव योषाः कल्याण्यः स्म्मयमानासोऽअग्निम् ॥

घृतस्य धाराः समिधोनसंतताजुषाणोहर्य्यतिजातवेदाः ॥ ११ ॥
कन्न्याऽइवव्वहतुमेतवाऽउं ऽअंज्यञ्जानाऽअभिचांकशीमि ॥ यत्रसोमः
सूयतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवन्ते ॥ १२ ॥ अभ्यर्षतसुष्टु
तिङ्गव्यंमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमँय्यज्ञन्नयतदेवतानो
घृतस्यधारामधुमत्पवन्ते ॥ १३ ॥ धामन्तेविश्श्वम्भुवनमम
धिश्रितमन्तः समुद्रेहृद्यन्तरायुषि ॥ अपामनीकेसमिथेयऽआभृत
स्तमश्यामुमधुमन्तन्तऽऊर्मिम् ॥ १४ ॥ चतुर्भिश्चचतुर्भिश्च द्वा
भ्याम्पञ्चभिरेवच॥हूयतेचपुनर्द्वाभ्यांतस्मैयज्ञात्मनेनमः ॥ १५ ॥

४

ज्ञानतोऽज्ञानतोवापिमन्त्रकर्म्मक्रियाविधिः॥ संपूर्णंकुरुयज्ञेशगार्हप
त्यनमोऽस्तुते॥१६॥ यथाशस्त्रप्रहाराणांकवचंभवतिवारणम् ॥ तद्व
देवापघातानांशांतिर्भवतिवारणम्॥१७॥इति वैश्वानरस्तुतिः॥१३॥
आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायचक्षसे ॥ १ ॥
योवः शिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ २ ॥
तस्माऽअरंगमामवोयस्यक्षयायजिन्वथ॥आपोजनयथाचनः ॥ ३ ॥
त्रातारमिन्द्रम्० ॥४॥ त्वंवरुणस्योत्तंभन० ॥५॥ भगप्रणेतः० ॥ ६ ॥
इदमापः प्रवहतावद्यञ्चमलंचयत् ॥ यच्चाभिदुद्रोहानृतंयच्चशेपेऽअ

भीरुणंम्म्॥ आपोमुातस्स्मुादेनंसुःपवंमानश्च्चमुश्चतु ॥ ७ ॥ सुमुद्द्रायंत्त्वा
व्वातांयुस्स्वाहांसारिरायंत्त्वाग्वातांयुस्स्वाहां । अनाधृष्ष्यायंत्त्वाग्वातांयु
स्स्वाहांप्प्रतिधृष्ष्यायंत्त्वाव्वातांयुस्स्वाहां । अवुस्यवेंत्त्वाव्वातांयुस्स्वा
हांशिमिदायंत्त्वाव्वातांयुस्स्वाहां ॥ ८ ॥ पुनन्तुंमादेवजुनाः२० ॥ ९ ॥
आप्प्यांयस्स्वसमेंतुतेव्विश्श्वतंःसोमुव्वृष्ण्यंम्म् ॥ भवाग्वाजंस्यसंगुथे
॥१०॥ शिरोंमेश्श्रीर्य्यशोमुखुन्त्विषिःकेशांश्श्चश्श्मश्श्रूंणि ॥ राजांमे
प्प्राणाऽअमृतंठंसुम्म्राट्चक्षुंर्व्विराट्श्श्रोत्रंम्म् ॥ ११ ॥ जिह्वामेभुद्द्रंवाङ्
महोमनोंमुन्न्युःस्स्वुराड्भामंः ॥ मोदांःप्प्रमोदाऽअंगुलीरङ्गांनिमिम्म्त्रमे

दं. सहः॥ १२ ॥ बाहूमेबलमिन्द्रियꣳहस्तौमेकर्म्मवीर्य्यम् ॥ आत्माक्ष अ.
॥ २०॥ त्रमुरोमम ॥ १३ ॥ पृष्ठीर्म्मेराष्ट्रमुदरमꣳसौग्रीवाश्चश्रोणी ॥ ऊरू १४
ऽअरत्नीजानुनीविशोमेऽङ्गानिसर्वतः ॥ १४ ॥ नाभिर्म्मेचित्तंविज्ञा
नम्पायुर्म्मेऽपचितिर्भसत् ॥ आनन्दनन्दावाण्डौमेभगःसौभाग्यम्प
सः॥जङ्घाभ्याम्पद्भ्यांधर्म्मोऽस्मिविशिराजाप्रतिष्ठितः ॥१५॥
पयःपृथिव्याम्० ॥ १६ ॥ देवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहु
भ्याम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्यन्त्रियेदधामिबृ
हस्पतेष्ट्वासाम्राज्येनाभिषिञ्चाम्यसौ ॥ १७ ॥ देवस्यत्वासवि

तुः प्रसुवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ सरस्वत्यै वाचो
यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ १८ ॥ देवस्य त्वा सवि
तुः प्रसुवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ अश्विनोर्भैषज्ज्ये
न तेजसे ब्रह्मवर्च्चसायाभिषिञ्चामि ॥ सरस्वत्यै भैषज्ज्येन वीर्याया
न्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि
॥ १९ ॥ ब्रा० पालाशं भवति तेन ब्राह्मणोऽभिषिञ्चति ब्रह्म
वै पालाशो ब्रह्मणैवैनमेतदभिषिञ्चति ॥ २० ॥ ब्रा० सर्वेषाँ वा एष वेदा
नाᳬं रसो यत्साम सर्वेषामेवैनमेतद्वेदानाᳬं रसेनाभिषिञ्चति ॥ २१ ॥

द॑ ब्रा० षड्डेव कुल्पाञ्जुहोति प्राणावैकुल्पोऽअमृतमुपवैष्प्राणाऽअमृते अ.
॥२१॥ नैवैनमेतुदभिषिञ्चति ॥ २२ ॥ दुीर्घायुत्वायबलांयुवर्चसेसुष्प्रजा १२
स्त्वायंचासाऽअथोजीवशुरदः॑शुतम् ॥ २३ ॥ द्यौःशान्तिरुन्तरिक्षुठं
शान्ति÷पृथिवीशान्तिुरापुःशान्तिुरोषधयुःशांति÷ ॥ वनुस्पतयुःशा
न्तिुर्विश्श्वेदेवाःशान्तिुर्ब्रह्मु शान्तिुः सर्वुठं शान्तिुःशान्तिरेुवशांतिुः
सामाुशान्तिरेधि ॥ २४ ॥ इति अमृताभिषेकोऽस्तु ॥ १४ ॥ ऋ०
श्रीर्वर्च्चस्वुमायुष्युमारोग्युमाविधात्पवमानम्महीयते ॥ धान्यंधुनं
पशुं बहुपुत्रलाभं शतसंम्वत्सुरन्दीर्घमायुः ॥ १ ॥ पुत्रामि

व पितरावश्विनोभेन्द्रावथुःकाव्यैर्दंसनाभिः ॥ यत्सुरामं व्यपिबः

शचीभिःसरस्वतीत्वामघवन्नभिष्णक् ॥ २ ॥ कामङ्कामदुघेधुक्ष्व

मित्रायवरुणायच ॥ इन्द्रायाश्विभ्याम्पूष्णेप्रजाभ्यऽओषधीभ्यः

॥३॥ ब्रा० अथपूर्वार्द्धेनदक्षिणाकामङ्कामदुघेधुक्ष्वमित्रायवरुणाय

च ॥ इन्द्रायाश्विभ्याम्पूष्णे प्रजाभ्यऽओषधीभ्यऽ इति सर्वे

देवत्यावैकृषिरेताभ्योदेवताभ्यःसर्वान्कामान्धुक्ष्व ॥ ४ ॥ ब्रा०

अथसुमङ्गलनामानंह्वयतिबहुकारश्रेयस्करभूयस्करेति यऽएवन्ना

माभवतिकल्याणमेवैतन्मानुष्यैवाचोवदति ॥ ५ ॥ ब्रा० तंवैदेवा

दं स्तुन्नाविदुष्ट्ययनेर्ठःसुर्व्वेवाकुर्व्वन्नवासुर्दधद्युतिवारे च यन्नावाक्याय अ.
॥२२॥ यंस्तुऽएनामृचमपश्यन् घामच्छदाग्निरिन्द्रोब्रह्मादेवोबृहस्पतिः ॥ सु १५
चेतसोविश्वेदेवायज्ञंप्प्रावन्तुनःशुभइति ॥ ६ ॥ यजुः ॥ इमामेऽअग्न
ऽइष्टकाधेनवं÷ सन्त्वेकांचदशंचदशंचशतञ्चंशतञ्चंसहस्रञ्चसहस्रं
ञ्चायुतंञ्चायुतंञ्चनियुतंञ्चनियुतंञ्चप्प्रयुतञ्चार्बुदञ्चन्यर्बुदञ्च समुद्र
श्च मद्ध्यंचान्तंश्चपरार्द्धश्चैतामेऽअग्नइष्टकाधेनवं÷सन्त्वमुत्रामुष्मिं
ल्लोके ॥ ७ ॥ विवंस्वन्नादित्यैषतेसोमपीथस्तस्मिन्मत्स्व ॥ श्रदं
स्म्मैनरोवचंसेदधातनुयदाशीर्दादम्पतीवाममश्नुतः ॥ पुमान्पुत्रोजा

यतेभिन्दतेघस्वघांघ्नि॰श्वाहांरपऽएंघतेगृहे ॥ ८ ॥ अग्नेगृहपतेसुगृहपतिस्त्वयांग्नेहंगृहपंतिनाभूयासठंसुगृहपतिस्त्वम्मयांग्ने गृहपंतिना भूयाः ॥ अस्थूरिणौगार्हंपत्यानिसन्तुशतठंहिमाःसूर्य्यंस्यावृतुमन्वावर्त ॥ ९ ॥ धन्वंनागाधन्वंनाजिञ्जंयेमधन्न्वंनातीव्राः समदोजयेम ॥ धनुःशत्रोरपकामंकृंणोतिधन्न्वंनासर्व्वाःप्प्रादिशो जयेम ॥ १० ॥ विश्श्वांनिदेवसवितर्दुरितानिपरांसुव ॥ यद्भद्रन्तन्नऽआसुंव ॥ ११ ॥ ब्रा० तस्यैसप्तदशसामिधेन्न्योभवान्तिसद्वन्तावाज्यभागौसदेवावरुन्धेविश्श्वानिदेवसवितः सघानोदेवः सवितास

दं.
॥२३॥

हावेत्युपाꣳशुहविषो याज्यानुवाक्येऽअनुष्टुभौ ॥ संघ्यजमेरजतꣳ हिरण्यन्दक्षिणानानारूपतायाऽअथोत्तमायानपक्क्रमाय शतमान म्भवति शतायुर्वै पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते ॥१२॥ मन्त्रार्थाः सफलाः संतु पूर्णाः संतु मनोरथाः ॥ शत्रूणांबुद्धि नाशोऽस्तु मित्राणामुदयोऽस्तुवः॥१॥ ऋग्वेदोथयजुर्व्वेदः सामवेदोह्य थर्वणः॥ ब्रह्मवर्चसदा नित्यंहन्यंतेतवशत्रवः ॥२॥ अक्षतान्विप्रहस्ते षुनित्यंवंदान्तियेनराः ॥ चत्वारोवृद्धिमायांतुआयुःकीर्तिर्यशोबलम् ॥३॥ उत्तिंष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे ॥ उपप्रयंन्तुमरुतंःसुदानं

अ.
१५

वुऽइंद्वंप्राशूर्भवासचां ॥ १३ ॥ गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर ॥ यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन ॥ १४ ॥ इति दण्डकं समाप्तम् ॥

